International Journal of Sanskrit Research
अनन्ता

ISSN: 2394-7519
IJSR 2020; 6(4): 89-90
© 2020 IJSR
www.anantaajournal.com
Received: 20-05-2020
Accepted: 21-06-2020

**डॉ. प्रदीप्त कुमार नन्दः**
विद्यावारिधिः, विद्वन्मणिः, वरिष्ठाध्यापकः
श्रीदधिवामनजीउ संस्कृत महाविद्यालयः
केन्द्रापड़ा, ओड़िशा, भारत

**Corresponding Author:**
**डॉ. प्रदीप्त कुमार नन्दः**
विद्यावारिधिः, विद्वन्मणिः, वरिष्ठाध्यापकः
श्रीदधिवामनजीउ संस्कृत महाविद्यालयः
केन्द्रापड़ा, ओड़िशा, भारत

# सर्वदर्शनस्वरूपा श्रीमद्भगवद्गीता

**डॉ. प्रदीप्त कुमार नन्दः**

## प्रस्तावना

"प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते"-इत्युक्तिमनुसरतामाब्रह्मस्तम्भपर्यन्तानां सर्वेषां विरंचिप्रपंचगतानां जीवानां दु:खप्रहाणपूर्वकं निरतिशयसुखप्राप्तये च निश्चप्रचमविरतं जायमाना प्रवृत्तिर्दरीदृश्यते । श्रवणमनननिदिध्यासनशीलानां तत्त्वपिपासुमानवानां कृते जीवनस्य परमलक्ष्यभूतं किमपि विलक्षणानन्दात्मकं परमात्मतत्त्वं विद्यते येन चिरसुखमासाद्यते. अस्मिन् संसारे इति सर्वेषां प्रेक्षावतां विदुषां विदितमेव । परमात्मतत्त्वन्तु चरमम् । तत्साक्षात्कारात्मोक्षः । ज्ञात्वा देवं सर्वपाशापहानिः [१] परमात्मा आनन्दस्वरूपः [२] रसस्वरूपः [३] चेति नानायुक्तिभिः प्रमाणितसिद्धान्तः । बद्धजीवानां कृते आत्मज्ञानाय आस्तिक-नास्तिकभेदेन द्वादशविधानि दर्शनानि मुख्यतया दृष्टिपथे समायान्ति । "नास्तिको वेदनिन्दकः" इति न्यायात् नास्तिकदर्शनानां स्वरूपं सर्वजनविदितम् । आस्तिकेष्वपि भक्तिज्ञाननिष्कामकर्माणि त्रीण्येव मुक्तेः साधनानि निरूपितानि । तथाहि– योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विवित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ।। [४] एतेषां त्रयाणां समवायः श्रीमद्भगवद्गीतायां विद्यते । सुतरां गीताशास्त्रं सर्वदर्शनोपकारकमिति प्रतिज्ञावाक्यं प्रमाणीकर्तुं कोऽपि यत्नः क्रियते ।

तत्र भगवद्गीता नाम काण्डत्रयात्मिका जगत्स्थितिकारणप्रवृत्तिनिवृत्तिलक्षणा वैदिकधर्मपरमार्थतत्त्वावबोधनरूपा भगवतः श्रीकृष्णस्य मुखपद्माद्विनिःसृता उपनिषत्सारसंकलिताऽमृतरूपा [५] अध्यात्म्यविद्या कवितामन्दाकिनी । परमपदप्राप्तिपरका वैशारदी गीता निर्वाणसंकल्पसरणिप्रवर्तमाना गरीयसी । तथाहि- प्रारब्धं भुञ्जमानोऽपि गीताभ्यासरतः सदा । स मुक्त स सुखी लोके कर्मणा नोपलिप्यते [६]।। भगवता श्रीकृष्णेनापि गीतायाः सर्वज्ञानसारमेयत्वं स्वीकृतम् । यदुक्तं गीतामाहात्म्ये- पीत्वा गीतामृतं लोके लब्ध्वा मोक्षं सुखी भवेत् । जनैः संसारदु:खार्तैः गीताज्ञानं च यैः श्रुतम् [७] ।। इति । इयं वेदत्रयी परमाविद्या नित्या अनिर्वाच्यपदात्मिका परमपावनमयी गङ्गा गायत्री सीता महासती ब्रह्मवल्ली ब्रह्मविद्या अर्धमात्रा मुक्तिगेहिनी सच्चिदानन्दा तत्त्वार्थगोचरीति नाम्ना सुपरिचिता सुदृश्या च वर्तते [८]। वादरायण-शाण्डिल्यादिभिर्महर्षिभिरनुप्राणिता बोधायनादिधर्माचार्यैः सनाथीकृता वाराहपाद्मादिमहापुराणैः समर्थिता सांप्रदायिकैराचार्यैश्च प्रज्ञावद्भिः व्याख्याता सर्वसनातन-मानवानां च कृते परमादरणीया परमाश्रयणीयेति नात्र विसंवादः [९] । न केवलं भारतवर्षे अपितु निखिले वसुमतीतले विभिन्नभाषाभिरस्याः प्रचार-प्रसारो बहुलतया दरीदृश्यते । तत्रादौ गीतायाः काण्डत्रयं निरूप्यते। श्रीमद्भगवद्गीता कर्मकाण्ड-उपासनाकाण्ड-ज्ञानकाण्डभेदात् त्रिधा विभक्ता । षड़ाध्यायविशिष्टे आद्यकाण्ड़े अर्जुनविषादयोग-सांख्ययोग-कर्मयोग-ज्ञानकर्मसंन्यासयोग-कर्मसंन्यासयोग-आत्मसंयमयोगादयः उपलभ्यन्ते । सप्तमादारभ्य द्वादशपर्यन्ताः उपासनाकाण्डे ज्ञानयोग-अक्षरब्रह्मयोग-राजविद्याराजगुह्ययोग-विभूतियोग-विश्वरूपदर्शनयोग-भक्तियोगादयः सन्निवेशिताः । त्रयोदशादारभ्य अष्टादशपर्यन्ताः क्षेत्रक्षेत्रज्ञविभागयोग-गुणत्रयविभागयोग-पुरुषोत्तमयोग-दैवासुरसंपद्विभागयोग-श्रद्धात्रयविभागयोग-मोक्षसंन्यासयोगाः ज्ञानकाण्डान्तर्भूताः लभ्यन्ते । यच्चोक्तं-कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् । त्वं पदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ।। द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना । भगवान्परमानन्दस्तत्पदार्थोऽवधार्यते ।। तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् । एवमप्यत्र काण्ड़ानां संबधोऽस्ति परस्परम् [१०]।। इति सोपपत्तिकी गीता कल्लोलिता दीनजनशरणप्रदायिनी विश्वेषां जनानां च कृते कल्पतरुरिव प्रतिभाति । पुनश्च सर्वशास्त्रमयी गीता [११] "गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिसृता [१२]।।" इत्यादिभिः प्रमाणवचनैः गीतायाः सुगेयत्वमावश्यकं प्रतीयते । सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः [१३] । इत्यनेन गीताया उपनिषत्सारत्वान्यथानुपपत्या कर्मकाण्ड़ेन उपनिषदामिव सर्वासामपि गीतानां ज्ञानकर्मसमुच्चयाभिप्रायेण नैकवाक्यता, नैकशास्त्रता वा स्वीक्रियते । "सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते"[१४] इत्यत्र सर्वकर्मभक्तियोगप्रकरणस्य ज्ञानमुपनिषत्पदवाच्ये पर्यवसानं सम्भवति । अनेन चेदं विशदीभवति यत् स्वतन्त्रज्ञानयोगप्राधान्ये तत्र सर्वेषां शास्त्राणां गुणप्रधानतया अधिकारिभेदेन अवस्थाभेदेन च सर्वाणि शास्त्राणि सप्रयोजनानि कृतकृत्यानि भवन्ति, अन्यथा न ।

सर्वेषामास्तिकदर्शनानां नास्तिकदर्शनानां च कदाचिद् ज्ञानयोगेन पर्यवसानाद् ज्ञानयोगप्राधान्यवादे सर्वदर्शनोपयोगी गीता भवेदिति व्यवस्थाप्यते । संप्रति गीतायाः लोकायतिक-सौगत-क्षपणकादीनां मतानि विचार्यन्ते । "अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्" (गी०-२/२६) नित्यं जातमित्यत्र प्रतिक्षणं विपरिणामेन देहात्मवादो नित्यं मृतत्वेन च क्षणिकवादः सम्भवति । अपि चान्यत्र "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" (गी०२/१३) इति देहस्य परिणमनतया जैनमतमपि संसाध्यते । "नासतो विद्यते भावो नाभावो विद्यते सतः" (तत्र-२/१६) इत्यत्र असतो भावस्य सतोऽभावस्य च अप्रसक्तत्वात् स्याद्वादप्रक्रियानुगुणविचारः संपद्यते । "कविं पुराणमनुशासितारमणोरणीयाँसमनुस्मरेद् यः" (गी०-८/९) इत्यत्र परमात्मन अणुस्वरूपविचारे परोक्षेण न्याय-वैशेषिकयोरपि प्रक्रिया स्थिरीक्रियते । पञ्चैतानि महाबाहो कारणानि निबोध मे । सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ।। (गी०१८/३) अपि च "नाभातो विद्यते सतः" (२/१६) अत्र सांख्यसंम्मतः सत्कार्यवादः संघटितः । महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।।(गी०१३/५) अनेन पञ्चतन्मात्राणि, पञ्चमहाभूतानि, दशेन्द्रियाणि, मनो बुद्धिः अहंकारः अव्यक्तं चेति चतुर्विंशतितत्त्वानि संगृहीतानि सन्ति । सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।। (गी० १३/१४) अत्रापि पुरुषतत्त्वं निर्गुणं क्षेत्रज्ञशब्दवाच्यम् । योगदर्शनं तु गीतायां स्पष्टमेव वरीवर्ति । "मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः" (तत्र-७/८) प्रयाणकाले मनसाचलेन (८/१०) "सर्वद्वाराणि संयम्य"(८/१२) "अभ्यासयोगेन ततः" (१/२४) इत्यादीनि प्रमाणानि तत्र योगदर्शनं समर्थयन्ति । "न कर्मणा मनारम्भानैष्कर्म पुरुषोऽश्नुते" (२/४) "नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः" (३/८) "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" (३/९) सहयज्ञा प्रजा सृष्ट्वा पुरो वाच प्रजापतिः (३/१०) एवमादीनि बहुनि मीमांसादर्शनविहित प्रमाणानि कर्मकाण्ड़संवलितानि तृतीयाध्याये प्रसिद्धानि सन्ति । शेषे वेदान्तदर्शनविषये विचार्यते । ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।। (१३/५) अत्र साक्षात्ब्रह्मसूत्रस्य नामोच्चारणेन वेदान्तवादः समर्थितः । "दैवी हैषा गुणमयी" (७/१४) अनेन च मायावादः फलितः । किं बहुना, "भक्त्या त्वनन्यया शक्य" (११/५४) "एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते" (१२/१) "मत्कर्मपरमो भव" (१२/१०) इत्यादिभिः सविशेषब्रह्मोपासनं भक्तियोगेन भगवतः प्राप्तिसाधनं द्वैतवेदान्तविज्ञानं समर्थयति। एवं ब्रह्माद्वैत-द्वैत-विशिष्टाद्वैत-द्वैताद्वैत-शुद्धाद्वैत-अचिन्त्यभेदाभेदादयः सर्वे वादाः गीतासु उपलभ्यन्ते । सुतरां भगवद्गीता सर्वदर्शनानुकूला सर्वसिद्धिप्रदा [१५] चेति निश्चप्रचं कथयितुं शक्यते । अलमतिविस्तरेण ।

**पादटीप्पण्यः**

१. श्वे०श्वे०-१/१
२. तै०उ०-३/६
३. तत्र-२/७/११
४. भाग०-११/२०
५. ई०उ०-११
६. गी०मा०-४
७. तत्र-३२
८. गी०भा०भू पृ-२
९. तत्र०पृ३
१०. तत्र०पृ-२
११. महा०भा०भीष्म०प०-४३/२
१२. गी०मा०-४
१३. गी०मा०-६
१४. भ०गी०-४/३३
१५. तत्र १८/१८